॥ श्रीराधाकृष्णाभ्यां नमः ॥

2158

महर्षिवेदव्यासप्रणीतं

# श्रीमद्भागवतमहापुराणम्
# श्रीधरीटीका एवं
# गुजरातीव्याख्यासहितम्

## [ तृतीय-खण्ड ]

( सप्तमः, अष्टमः एवं नवमः स्कन्धः )

सच्चिदानन्दरूपाय विश्वोत्पत्त्यादिहेतवे।
तापत्रयविनाशाय श्रीकृष्णाय वयं नुमः॥
सदा सेव्या सदा सेव्या श्रीमद्भागवती कथा।
यस्याः श्रवणमात्रेण हरिश्चित्तं समाश्रयेत्॥

अनुवादिका : **श्रीमती वैदेही पार्थिवकुमार अध्यारु**

[ गीताप्रेस, गोरखपुर ]

# અક્ષરમાલિકા

રસેશ્વર શ્રીબાલકૃષ્ણલાલજીની અસીમ કૃપાથી ગુજરાતી અનુવાદ સહિત શ્રીમદ્ ભાગવત અને શ્રીધરી ટીકાનો ત્રીજો ખંડ અધ્યાત્મનિષ્ઠ વાચકો સમક્ષ ગીતાપ્રેસ દ્વારા પ્રસ્તુત થાય છે, તે અવસરે મને અપાર તૃપ્તિનો અનુભવ થઈ રહ્યો છે.

સચ્ચિદાનંદ પરમાત્માના સ્વકીય તેજપુંજસ્વરૂપ શ્રીમદ્ ભાગવતામૃતને ઘૂંટડે ઘૂંટડે માણતા આપણે સપ્તમ સ્કંધના ઉંબરે ઊભા છીએ. ભગવાન બાદરાયણ વ્યાસજી શ્રીશુકદેવજીના મુખે શ્રીમદ્ ભાગવતની મધુર કથા દ્વારા આપણને વારંવાર એક જ લક્ષ્ય પ્રત્યે અંગુલિનિર્દેશ કરે છે.

**'तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्॥'** શ્રીમદ્ ભા. ૭/૧/૩૧ 'તેથી ગમે તે પ્રકારે મન શ્રીકૃષ્ણમાં તન્મય કરી લેવું જોઈએ.' પણ મન શ્રીકૃષ્ણમાં તન્મય થાય કેવી રીતે? તે માટે કહે છે કે ભગવાનની પરમ મંગળમય લીલાકથાઓનું વારંવાર શ્રવણ કરવાથી ભગવાન શ્રીકૃષ્ણ કાનના માર્ગથી હૃદયમાં આવીને બિરાજમાન થઈ જાય છે.

**'प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्।**
**धुनोति शमलं कृष्णः सलिलस्य यथा शरत्॥** (શ્રીમદ્ ભા. ૨/૮/૫)

'કાનનાં છિદ્રો દ્વારા ભક્તોના ભાવમય હૃદયકમળમાં પ્રવિષ્ટ થયેલા શ્રીકૃષ્ણ, શરદઋતુ જળના મળને દૂર કરે તેમ ભક્તોના મનોમળને દૂર કરે છે.' માટે કાનના પડિયા ભરી ભરીને શ્રીકૃષ્ણકથામૃતના રસાસ્વાદનમાં મનને નિમગ્ન કરી દેવું જોઈએ.

ભગવાન વેદવ્યાસજીનાં દુર્બોધ પદોને સુબોધ બનાવનાર પંડિત શ્રીધરાચાર્ય સ્વામિચરણોને પ્રણામ કરીને અને જેમની જ્ઞાનોન્મુખી કૃપા અને માર્ગદર્શનથી આ અનુવાદ થઈ શક્યો છે તે પરમપૂજ્ય ગુરુદેવ શ્રી જોષીસાહેબના ચરણોમાં પ્રણામ કરીને આ તૃતીય ખંડરૂપી અક્ષરમાલિકા પ્રભુની પ્યારી ગ્રીવામાં પ્રેમથી પધરાવું છું.

— **શ્રીકૃષ્ણકૃપાકાંક્ષિણી**

**વૈદેહી**

॥ શ્રીહરિઃ ॥

# વિષય-સૂચી

## તૃતીય ખંડ

| અધ્યાય સં. | વિષય | પૃષ્ઠાંક |
|---|---|---|

### સાતમો સ્કંધ



### આઠમો સ્કંધ

## નવમો સ્કંધ

॥ श्रीहरिः ॥

मेरा सत् चित् आनंदरूप कोई कोई जाणे रे॥
जनम मरण मेरा धर्म नहीं है।
पाप पुण्य मेरा कर्म नहीं है॥
मैं हूँ साक्षीभूत कोई कोई जाणे रे॥
पंचकोश से मैं हूँ न्यारा।
तीन अवस्था से भी न्यारा॥
अनुपम चित्-स्वरूप कोई कोई जाणे रे।
मेरा सत् चित् आनंदरूप कोई कोई जाणे रे॥

# मंगलाचरण

वासुदेवसुतं देवं कंसचाणूरमर्दनं
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्।
कृष्णाय वासुदेवाय देवकीनन्दनाय च
नन्दगोपकुमाराय गोविन्दाय नमो नमः॥

नमः पङ्कजनाभाय नमः पङ्कजमालिने
नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम्
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।
गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः
गुरुः साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः॥

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि॥

त्वमेव माता च पिता त्वमेव। त्वमेव बन्धुश्च सखा त्वमेव॥
त्वमेव विद्या द्रविणं त्वमेव। त्वमेव सर्वं मम देवदेव॥

# गोविन्द दामोदर स्तोत्रम्

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम्।
वटस्य पत्रस्य पुटे शयानं बाल मुकुन्दं मनसा स्मरामि॥ १॥

श्रीकृष्ण गोविन्द हरे मुरारे हे नाथ नारायण वासुदेव।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ २॥

विक्रेतुकामा किल गोपकन्या मुरारिपादार्पित चित्तवृत्तिः।
दध्यादिकं मोहवशादवोचद् गोविन्द दामोदर माधवेति॥ ३॥

गृहे गृहे गोपवधू कदम्बाः सर्वे मिलित्वा समवाप्य योगम्।
पुण्यानि नामानि पठन्ति नित्यं गोविन्द दामोदर माधवेति॥ ४॥

सुखं शयाना निलये निजेऽपि नामानि विष्णोः प्रवदन्ति मर्त्याः।
ते निश्चितं तन्मयतां व्रजन्ति गोविन्द दामोदर माधवेति॥ ५॥

जिह्वे सदैवं भज सुन्दराणि नामानि कृष्णस्य मनोहराणि।
समस्तभक्तार्ति विनाशनानि गोविन्द दामोदर माधवेति॥ ६॥

सुखावसाने इदमेव सारं दुःखावसाने इदमेव ज्ञेयम्।
देहावसाने इदमेव जाप्यं गोविन्द दामोदर माधवेति॥ ७॥

श्रीकृष्ण राधावर गोकुलेश गोपाल गोवर्धन नाथ विष्णो।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ८॥

*****

# प्रार्थना

## ( जित देखौं तित श्याममयी है )

गोविन्द, मेरी यह प्रार्थना है, भूलूँ न मैं नाम कभी तुम्हारा।
निष्काम होकर के दिन रात गाऊँ, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १॥

देहान्त काले तुम समाने हो, बंशी बजाते, मन को लुभाते।
गाता यही मैं तन नाथ त्यागूँ, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २॥

माता यशोदा हरि को जगावें, जागो, उठो कृष्ण अब नेत्र खोलो।
द्वारे खड़े गोप बुला रहे हैं, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ ३॥

गोपी दही छाँछ विलो रही है, मीठा करे शब्द घड़ा मथानी।
गाती मथानी संग नारि सारी, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ ४॥

ले ले करो में निज पिंजरों को, कोई पढ़ाती शुक सारिकाको।
गाते यही हैं शुक सारिका भी, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ ५॥

बैठी लिये है दुहनी अनोखी, गो दुग्ध काढ़े अबला नवेली।
गोदुग्ध धारा संग गा रही है, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ ६॥

माला रही गूँथ सुबाम कोई, लै गोद बैठी अपने ललाको।
गा–गा सुनाती निज बाल को है, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ ७॥
धोये किसीने मुख बालकों के, लै गोद में प्यार करे, दुलारे।
हे लाल गावो तुम संग मेरे, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ ८॥
कोई जगाती निज लाल को है, जागो दुलारे टुक नैन खोलो।
ये नाम बोलो हरिके सलोने, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ ९॥
कोई नवेली, पति को जगावे, प्राणेश जागो अब नींद त्यागो।
बेला यही है हरि गीत गाओ, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १०॥
कासार के मध्य लला विलोको, कैसे मनोहारि सरोज फूले।
बैठे यही सब मिलकर के गाते, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ ११॥
देखो पखेरू तरु डालियों में, गाते सुहाते मधुर स्वरों में।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १२॥
ऊँचे स्वरों से हरि गीत गाती, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १३॥
जागे पुजारी हरि मंदिरों में, जाके जगाते हरि को सभी ये।
हे शीलसिन्धो, अब नेत्र खोलो, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १४॥

धन्या सभी हैं व्रज गोपिकाएँ, गाती सदा जो हरि नाम प्यारा।
गो दोहते भी यह गीत गाती, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १५॥
है टूटता तार नहीं कभी ये, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १६॥
डाली मथानी दधि में किसी ने, है ध्यान आया दधि चोर का ही।
गदगद् हुआ कंठ पुकारती है, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १७॥
हैं लीपती आँगन नारि कोई, गोविन्द आवें, मय गेंद खेलें।
ध्यानस्थ यह ही पद गा रही हैं, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १८॥
सोया किसी का सुत पालने में, डोरी करों से जब खींचती है।
गाती यही है हरि प्रेम मत्ता, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ १९॥
रोया किसी का जब लाल प्यारा, हो प्रेम मग्ना उसने पुकारा।
रोओ न, गाओ तुम संग मेरे, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २०॥
झारि उठाई कर में किसीने, धोती रसोई, मन में विचारे।
गोपाल जीमे हम गीत गायें, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २१॥
कोई नवेली घर को बुहारे, गोपाल को ही मन में निहारे।
आनन्द से शील यही पुकारे, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २२॥

देखो जहाँ भी यह दीखता है, सोचो जरा भी यह सूझता है।
सर्वत्र यह ही स्वर गूँजता है, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २३॥
राकेश तारागण भानु विद्युत, श्यामा घटा ये जलबिन्दु सारे।
आकाश में है ध्वनि यह लगाते, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २४॥
पक्षी अनेको नभ पन्थ जाते, कैसी सुधा की झड़ियाँ लगाते।
मीठे स्वरों में हरि गीत गाते, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २५॥
स्त्रोतस्विनी के कल नाद मध्ये, उत्तुङ्गशैलाग्र-जल-प्रपाते।
हैं शब्द ये ही श्रुति मध्य गाते, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २६॥
ग्रामों घरों में वन निर्जनों में, अट्टालिका में कुटिया धरा में।
हैं गूँजते नाम यही सभी में, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २७॥
वारीश* की प्रेममयी तरंगे, भावेश की भाव भरी उमंगे।
संकेत द्वारा दिन रात गाती, गोविन्द दामोदर माधवेति।
गोविन्द दामोदर माधवेति, हे कृष्ण, हे यादव, हे सखेति॥ २८॥

* वारीश (समुद्र)

॥ श्रीहरिः ॥

# आरति बालकृष्णकी कीजै

आरति बालकृष्ण की कीजै।
अपनो जनम सुफल करि लीजै॥

श्रीयशोदाको परम दुलारो,
बाबाकी अखियन को तारो।
गोपिन के प्राणन सो प्यारो,
इन पर प्राण निछावर कीजै॥
आरति बालकृष्ण की कीजै॥

बलदाऊको छोटो भैया,
कनुवा कहि कहि बोले मैया।
परममुदित मन लेत बलैया,
अपनो सरबस इनकूँ दीजै॥
आरति बालकृष्ण की कीजै॥

श्रीराधावर सुघर कन्हैया,
व्रजजन को नवनीत खवैया।
देखत ही मन नयन चुरैया,
यह छबि नयनन में भरि लीजै॥
आरति बालकृष्ण की कीजै॥

तोतरि बोलनि मधुर सुहावे,
सखन मध्य खेलत सुख पावे।
सोइ सुकृती जो इनकूँ ध्यावे,
बस इनकूँ अपनो करि लीजै॥
आरति बालकृष्ण की कीजै॥

॥ श्रीहरिः ॥

# श्रीमद्भागवतकी आरती

आरति अतिपावन पुरानकी।
धर्म-भक्ति-विज्ञान-खानकी ॥
महापुरान भागवत निरमल।
शुक-मुख-विगलित निगम-कल्प-फल।
परमानन्द-सुधा-रसमय कल।
लीला-रति-रस रस-निधानकी ॥
॥ आरति० ॥

कलि-मल-मथनि त्रिताप-निवारिनि।
जन्म-मृत्युमय भव-भय-हारिनि।
सेवत सतत सकल सुखकारिनि।
सुमहौषधि हरि-चरित-गानकी ॥
॥ आरति० ॥

विषय-विलास-विमोह-विनाशिनि ।
विमल विराग विवेक विकाशिनि।
भगवत्तत्त्व-रहस्य प्रकाशिनि।
परम ज्योति परमात्म-ज्ञानकी ॥
॥ आरति० ॥

परमहंस-मुनि-मन उल्लासिनि।
रसिक-हृदय रस-रास-विलासिनि।
भुक्ति, मुक्ति, रतिप्रेम-सुदासिनि।
कथा अकिञ्चनप्रिय सुजानकी ॥
॥ आरति० ॥

॥ ॐ नमो भगवते वासुदेवाय ॥

# श्रीमद्भागवतमहापुराणम्

## सप्तमः स्कन्धः

### अथ प्रथमोऽध्यायः

નારદ-યુધિષ્ઠિરનો સંવાદ તથા જય-વિજયની કથા

॥ श्रीगणेशाय नमः ॥

स्वभक्तपक्षपातेन तद्विपक्षविदारणम्।
नृसिंहमद्भुतं वन्दे परमानन्दविग्रहम्॥ १

શ્રીગણેશજીને નમસ્કાર

પોતાના ભક્ત ઉપર પક્ષપાત હોવાથી તેના વિરોધીને વિદારી નાખનાર અદ્ભુત એવા પરમાનંદસ્વરૂપ નરસિંહ ભગવાનને હું વંદન કરું છું.॥ ૧ ॥

**वंशीधरी—**अद्भुतमकस्मादाविर्भूतम्।

અચાનક આવિર્ભૂત થયેલા અદ્ભુત (નરસિંહ) ને (હું વંદન કરું છું.)

ऊतिः पञ्चदशाध्यायैः सप्तमे वर्ण्यतेऽधुना।
ऊतिश्च वासना प्रोक्ता तत्तत्कर्मानुसारिणी॥ २

હવે સાતમા સ્કંધમાં પંદર અધ્યાયો દ્વારા તે શુભ-અશુભ કર્મોને અનુસરનારી ઊતિ, કે જેને વાસના કહેલી છે તેનું વર્ણન કરવામાં આવ્યું છે.॥ ૨ ॥

अशुभा च शुभा चेति द्विधा सा हेतुभेदतः।
अशुभा महतां कोपाच्छुभा महदनुग्रहात्॥ ३

જુદા જુદા હેતુઓ હોવાને કારણે તે વાસના અશુભ અને શુભ–એમ બે પ્રકારની છે. અશુભ વાસના મહાપુરુષોના કોપથી થાય છે અને શુભ વાસના મહાપુરુષની કૃપાથી થાય છે.॥ ૩ ॥

हरेर्द्वारपयोर्यद्वद्वैकुण्ठे वसतोरपि।
चतुःसनरुषा विष्णुद्वेषाद्यशुभवासना॥ ४

શ્રીહરિના (જય-વિજય નામના) દ્વારપાળોને વૈકુંઠમાં વસતા હોવા છતાં પણ ચાર સનત્કુમારોના ક્રોધથી ભગવાન વિષ્ણુ ઉપર દ્વેષ થવો વગેરે અશુભ વાસના જેમ થઈ હતી (તેમ અશુભ વાસના સમજવી).॥ ૪ ॥

---

* મૂળ શ્લોક અને તેનો અનુવાદ મોટા અક્ષરોમાં છે અને તેના ઉપરની શ્રીધરસ્વામીની ભાવાર્થદીપિકા ટીકા તેનાથી નાના અક્ષરોમાં છે. શ્રીધરજી દ્વારા સમજાવવામાં આવેલા મૂળ શ્લોકના શબ્દોને ગુજરાતી અનુવાદમાં અવતરણ ચિહ્નોમાં મૂકી સમજાવવામાં આવ્યા છે. ક્યાંક વિશેષ પ્રકાશ પાડવા અન્ય ટીકાઓ પણ ઉદ્ધૃત કરેલી છે.

यथा च दैत्यगर्भेऽपि प्रह्लादस्य सतः स्थिरा।
नारदानुग्रहादास विष्णौ सद्भक्तिवासना॥ ५

દૈત્યના ગર્ભમાં હોવા છતાં જેમ પ્રહ્‌લાદજીને શ્રીનારદજીના અનુગ્રહથી ભગવાન વિષ્ણુ ઉપર શ્રેષ્ઠ ભક્તિરૂપ સ્થિર વાસના થઈ હતી (તેમ શુભ વાસના સમજવી).॥ ૫॥

स्वभक्तं च सदा विष्णुर्द्विषन्तमपि रक्षति।
तृतीयेऽथ भवे द्वास्थावकरोदात्मसात्पुनः॥ ६

પોતાનો ભક્ત દ્વેષ કરતો હોય તો પણ ભગવાન વિષ્ણુ તેની સદા રક્ષા કરે છે. તે અનુસાર પોતાના દ્વારપાળ જય-વિજયને ત્રીજા જન્મે (શાપમુક્ત કરી ભગવાને) પાછા નિજ જન તરીકે સ્વીકાર્યા હતા.॥ ૬॥

अतो मनीषिणा यत्नः कार्यो महदनुग्रहे।
इत्येतदर्थमूतीनामत्र लक्षणमुच्यते॥ ७

આથી બુદ્ધિમાન મનુષ્યે મહાપુરુષોનો અનુગ્રહ પ્રાપ્ત કરવા માટે પ્રયત્ન કરવો જોઈએ, એ વાત સાર્થક કરવા માટે અહીં (સપ્તમ સ્કંધમાં) ઊતિનું લક્ષણ કહેવામાં આવ્યું છે.॥ ૭॥

तत्रादौ दशभिर्दैत्यतत्पुत्रमतिभेदतः।
महत्कोपानुकम्पोत्थवासनाभेद उच्यते॥ ८

તેમાં પ્રથમ દસ અધ્યાયો દ્વારા દૈત્ય અને તેના પુત્રની બુદ્ધિમાં ભેદ હોવાથી (દૈત્ય હિરણ્યકશિપુ ઉપર) મહાપુરુષોના કોપથી અને (તેના પુત્ર પ્રહ્‌લાદ ઉપર) મહાપુરુષોની અનુકંપાથી ઊભી થતી વાસનાઓનો ભેદ કહેવામાં આવે છે.॥ ૮॥

सद्वासना च युज्येत कर्मभिः शुद्धचेतसः।
परैस्तु पञ्चभिस्तस्मात्क्रियते धर्मनिर्णयः॥ ९

શુદ્ધ ચિત્તવાળા મનુષ્યની સાથે કર્મો વડે સદ્‌વાસના જોડાય છે, તેથી (દસ અધ્યાય) પછીના પાંચ અધ્યાયો દ્વારા ધર્મનિર્ણય કરવામાં આવ્યો છે.॥ ૯॥

तत्र तु प्रथमेऽध्याये हिरण्यकशिपोः सुते।
विष्णुभक्ते विरोधस्तु विप्रशापज ईर्यते॥ १०

તે દસ અધ્યાયોમાંના પ્રથમ અધ્યાયમાં તો હિરણ્યકશિપુનો પોતાના વિષ્ણુભક્ત પુત્ર વિષે, સનકાદિ દ્વારા અપાયેલા શાપને કારણે (થયેલા અસુરભાવથી) જન્મેલો વિરોધ જ વર્ણવવામાં આવે છે.॥ ૧૦॥

**॥ श्रीगोपालकृष्णाय नमः॥**

॥ શ્રીગોપાલકૃષ્ણને નમસ્કાર॥

यदुक्तं पूर्वस्कन्धान्ते—
हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना।
मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत्॥

પૂર્વના સ્કંધ (૬) ના અંતમાં જે કહેવામાં આવ્યું કે ‘ઇન્દ્રના પક્ષમાં રહી તેને ગુપ્ત રીતે પાછળથી સહાય કરનાર ભગવાન વિષ્ણુ દ્વારા

इति तच्छ्रुत्वा विस्मितः परीक्षित्पृच्छति—**सम इति** त्रिभिः।

राजोवाच

**समः प्रियः सुहृद्ब्रह्मन् भूतानां भगवान् स्वयम्।**
**इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा॥ १**

न हि समस्य सुहृदश्च वैषम्यं नामास्ति। न च प्रियस्य प्रीतिकर्तृषु वैषम्यं युक्तमित्यर्थः॥ १॥

किंच यस्य यैः प्रयोजनं सिध्यति स तत्पक्षपाती भवति, येभ्यो बिभेति तान्द्वेषेण हन्ति न तु तदत्रास्तीत्याह—**न हीति**।

**न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः।**
**नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि॥ २**

निःश्रेयसं परमानन्द एव आत्मा स्वरूपं यस्य। असुरेभ्यश्चोद्वेगो भयं नास्ति। अतो विद्वेषोऽपि नास्त्येव। तत्र हेतुः—**अगुणस्येति**। गुणाधीनौ प्रीतिद्वेषावित्यर्थः॥ २॥

**वंशीधरी—**निर्गुणस्य गुणाभावात्तद्धेतुकरागद्वेषौ कथं सम्भवत इति भावः।

જેના પુત્રો મરાયા હતા તેવી, શોકને કારણે ઉદ્દીપ્ત થયેલા ક્રોધથી સળગતી દિતિ વિચારવા લાગી.' (શ્રીમદ્ ભા.૬/૧૮/૨૩) તે સાંભળીને વિસ્મય પામેલા રાજા પરીક્ષિત ત્રણ શ્લોકોથી પૂછે છે— '**समः इति।**'

**રાજા પરીક્ષિત બોલ્યા** – હે બ્રહ્મન્, સર્વ પ્રાણીઓને માટે સમાન, પ્રિય તથા સુહૃદ એવા ભગવાને, વિષમ બુદ્ધિવાળા હોય તેમ ઈન્દ્ર માટે દૈત્યોનો નાશ કેમ કર્યો?॥ ૧૧॥

(ભેદભાવથી રહિત) સમાન અને મિત્ર એવા ભગવાનને ખરેખર વિષમતા ન હોય. વળી, સર્વના પ્રિય એવા ભગવાનને પ્રીતિ કરનારાઓ ઉપર વિષમભાવ હોય તે યોગ્ય નથી, એમ અર્થ છે.॥ ૧॥

વળી, જેનું પ્રયોજન જેમનાથી સિદ્ધ થાય તે તેનો પક્ષપાતી થાય છે અને જેમનાથી ભય થાય છે તે તેમને દ્વેષથી હણે છે. અહીં તો તે બન્ને નથી, એમ કહે છે— '**न हि इति।**'

ખરેખર, સાક્ષાત્ પરમાનંદ એ જ જેમનું સ્વરૂપ છે તેવા આ ભગવાનને દેવગણો સાથે કંઈ પ્રયોજન નથી અને સત્ત્વાદિ ગુણરહિત એવા (આ) ભગવાનને અસુરોથી ભય નથી અને દ્વેષ પણ નથી.॥ ૨॥

'**निःश्रेयसम्**' પરમાનન્દ જ '**आत्मा**' સ્વરૂપ છે જેમનું – અસુરોથી '**उद्वेगः**' ભય નથી, આથી વિદ્વેષ પણ નથી જ. તે માટેનું કારણ— '**अगुणस्य इति।**' ગુણોને અધીન હોય તેવા રાગ અને દ્વેષ એમ અર્થ છે.॥ ૨॥

નિર્ગુણ (એટલે અહીં ગુણાતીત) પરમાત્માને સત્ત્વાદિ ગુણોનો અભાવ હોવાથી તે તે ગુણોને કારણે થનારા રાગ-દ્વેષ કેવી રીતે સંભવે, એવો ભાવ છે.

**इति नः सुमहाभाग नारायणगुणान् प्रति।**
**संशयः सुमहाञ्जातस्तद्भवांश्छेत्तुमर्हति॥ ३**

(ભગવત્પ્રેમના) મહાસૌભાગ્યથી સમ્પન્ન (હે શુકદેવજી), આ પ્રમાણે ભગવાન શ્રીનારાયણના (સમત્વાદિ) ગુણો પ્રત્યે અમને ઘણો મોટો સંશય થયો છે, તેને આપ દૂર કરવા સમર્થ છો.॥ ૩॥

श्रीनारायणस्य गुणाननुग्रहनिग्रहादीन् प्रति। तत्तं संशयम्॥ ३॥

શ્રીનારાયણના અનુગ્રહ, નિગ્રહ વગેરે ગુણો પ્રત્યે – '**तत्**' તે સંશયને ॥ ૩॥

**श्रीशुक उवाच**

**साधु पृष्टं महाराज हरेश्चरितमद्भुतम्।**
**यत्र भागवतमाहात्म्यं भगवद्भक्तिवर्धनम्॥ ४**

**શ્રીશુકદેવજી બોલ્યા** – હે મહારાજ (પરીક્ષિત), શ્રીહરિના અદ્ભુત ચરિત્રના સંબંધમાં તમે ખૂબ સુંદર પ્રશ્ન કર્યો, જેમાં ભગવદ્ભક્ત (પ્રહ્લાદ)નું, ભગવાનમાં ભક્તિ વધારનારું માહાત્મ્ય (ગવાયું) છે.॥ ૪॥

भागवतस्य प्रह्लादस्य माहात्म्यं गीयत इति संबन्धः॥ ४॥

'**भागवतस्य**' ભગવદ્ભક્ત પ્રહ્લાદનું માહાત્મ્ય ગવાયું છે, એમ સંબંધ છે.॥ ૪॥

अत्राक्षराधिक्यमार्षम्। 'यद्भागवतमाहात्म्यं' इति पाठः।

'**यत्र भागवतमाहात्म्यम्**' માં વધારાનો અક્ષર છે તે આર્ષ પ્રયોગ છે. '**यद्भागवतमाहात्म्यम्**' એમ પાઠ (પણ) છે. (અનુષ્ટુપ છંદના પ્રત્યેક ચરણમાં આઠ અક્ષર હોય છે.)

**गीयते परमं पुण्यमृषिभिर्नारदादिभिः।**
**नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम्॥ ५**

(આ) પરમ પુણ્યમય (પ્રસંગ)ને નારદજી વગેરે ઋષિઓ દ્વારા (અતિ પ્રેમથી) ગાવામાં આવ્યો છે. (હવે હું મારા પિતાશ્રી) કૃષ્ણ દ્વૈપાયન વ્યાસને નમસ્કાર કરીને ભગવાન શ્રીહરિની કથા કહીશ.॥ ૪॥

कृष्णाय व्यासाय। कृष्णं मुनिं नत्वेत्यर्थः *॥ ५॥

'**कृष्णाय**' કૃષ્ણ દ્વૈપાયન વ્યાસજીને, વ્યાસમુનિને નમસ્કાર કરીને એમ અર્થ છે.॥ ૫॥

(**जिह्वां लब्ध्वापि यो विष्णुं कीर्तनीयं न कीर्तयेत्।**
**लब्ध्वापि मोक्षनिःश्रेणीं स नारोहति दुर्मतिः॥ १**

(જિહ્વા પ્રાપ્ત કરીને પણ જે દુર્મતિ મનુષ્ય કીર્તન કરવા યોગ્ય શ્રીવિષ્ણુ ભગવાનનું કીર્તન કરતો નથી, તે મોક્ષની નિસરણી પ્રાપ્ત કરીને પણ તેના પર ચઢતો નથી.॥ ૧॥

* **नत्वा** સાથે દ્વિતીયા વિભક્તિ લેવી જોઈએ એટલે '**कृष्णाय मुनये**' ને બદલે '**कृष्णं मुनिम्**' છે.

तस्माद्गोविन्दमाहात्म्यमानन्दरससुन्दरम् ।
शृणुयात्कीर्तयेन्नित्यं स कृतार्थो न संशयः॥ २

તેથી આનંદરસથી સુંદર શ્રીગોવિંદના માહાત્મ્યનું જે નિત્ય શ્રવણ અને કીર્તન કરે છે, તે કૃતાર્થ થાય છે, એમાં સંશય નથી.॥ ૨ ॥

तस्माद्धीमन्कथां पुण्यां गोविन्दचरिताञ्चिताम्।
महापुण्यप्रदां यस्माच्छृणुष्व नृपसत्तम॥ ३)

માટે હે બુદ્ધિમાન શ્રેષ્ઠ મહારાજા, મહાપુણ્ય આપનારી એવી શ્રીગોવિંદના ચરિત્રથી શોભતી પવિત્ર કથાનું તમે શ્રવણ કરો.॥ ૩॥)

(एतच्छ्लोकत्रयं व्याख्यारहितमधिकं वीर. पाठे।)

(વીર રાઘવજીના પાઠમાં આ ત્રણ વ્યાખ્યારહિત શ્લોકો અધિક છે.)

**निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः।**
**स्वमायागुणमाविश्य बाध्यबाधकतां गतः॥ ६**

વાસ્તવમાં ભગવાન પ્રકૃતિથી પર હોવાથી નિર્ગુણ કે ગુણાતીત, અજન્મા અને અવ્યક્ત (રાગદ્વેષાદિના કારણ એવાં દેહ, ઇન્દ્રિયોથી રહિત) છે, છતાં પણ પોતાની માયાના (સત્ત્વાદિ) ગુણોમાં અધિષ્ઠિત થઈ પીડા પામનાર અને પીડા આપનારના (વિરોધી) ભાવને ગ્રહણ કરે છે.॥ ૬॥

यस्मात्प्रकृतेः परः। अतो निर्गुणः। अत एवाजः। अत एवाव्यक्तो रागद्वेषादिनिमित्त-भूतदेहेन्द्रियादिरहितः। सोऽपि स्वमायागुणं सत्त्वादिकमाविश्याधिष्ठाय बाध्यान्प्रति। यद्वा देवासुराणां परस्परं या बाध्यबाधकता तां गतः प्राप्तः। तत्र हेतुर्जात इत्यर्थः॥ ६॥

કારણ કે પ્રકૃતિથી પર છે, આથી નિર્ગુણ છે, આથી અજન્મા છે. આથી જ '**अव्यक्तः**' રાગ-દ્વેષાદિના કારણરૂપ દેહ, ઇન્દ્રિયોથી રહિત છે. તેવા હોવા છતાં પણ પોતાની માયાના સત્ત્વાદિ ગુણોમાં '**आविश्य**' અધિષ્ઠિત થઈ પીડા પામનાર પ્રત્યે (પીડા આપનારના ભાવને ગ્રહણ કરે છે.) અથવા દેવો અને અસુરોને એકબીજા પ્રત્યે બાધ્યબાધક ભાવ થાય છે, તે સ્થિતિને ભગવાન પ્રાપ્ત થાય છે. તેમાં તેઓ માત્ર પ્રેરક હેતુ બને છે, એમ અર્થ છે.॥ ૬॥

**अन्वि.**—देवासुराणां या परस्परं बाध्यबाधकता तां गतः तत्र हेतुर्जातः न तु द्वेषस्नेहाद्यैः। अतः तस्य दोषो नास्ति।

દેવો અને અસુરોમાં પરસ્પર જે બાધ્યબાધક ભાવ છે તેને ભગવાન ગ્રહણ કરે છે. તેમાં ભગવાન (પ્રેરક) હેતુ બને છે, પણ દ્વેષ, સ્નેહ વગેરેથી (કર્તા) નથી બનતા. (ભગવાન પ્રયોજક કર્તા બને છે, પ્રયોજ્ય કર્તા નથી બનતા.) તેથી તેમને દોષ લાગતો નથી.

तत्र गुणानां स्वीयत्वे सति प्राकृतपुरुषवद्विषमः स्यात्तत्तु नास्तीत्याह— **सत्त्वमिति**।

(સત્ત્વાદિ) ગુણો ભગવાનના પોતાના હોય તો તેમનામાં પ્રાકૃત મનુષ્યની જેમ વિષમતા હોય પણ એ ગુણો તેમના પોતાના છે જ નહીં, એમ કહે છે – '**सत्त्वम् इति।**'

**सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः।**
**न तेषां युगपद्राजन् ह्रास उल्लास एव वा॥ ७**

સત્ત્વ, રજસ્ અને તમસ્ એ પ્રકૃતિના ગુણો છે, પરમાત્માના નહીં. હે રાજા, તે ગુણોનાં ક્ષય અને વૃદ્ધિ એક સાથે થતાં નથી જ.॥૭॥

ननु स्वेच्छया गुणाधिष्ठानेनापि पक्षपात–वैषम्यं स्यादेव, न। तस्य कालकृतत्वादित्याह— न तेषामिति सार्धेन। उल्लासो वृद्धिः॥७॥

શંકા કરવામાં આવી છે કે સ્વેચ્છાપૂર્વક પણ જો ભગવાન ગુણોના અધિષ્ઠાનરૂપ હોય, તો પક્ષપાતની વિષમતા થાય જ. તે માટે ઉત્તર આપે છે કે તેમ નથી. ગુણોની વિષમતા તો કાળને કારણે થાય છે, એમ દોઢ શ્લોકથી કહે છે— '**न तेषाम् इति**'। '**उल्लासः**' વૃદ્ધિ॥૭॥

**जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान्।**
**तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत्॥ ८**

તે જુદા જુદા સમયને અનુરૂપ થઈને ભગવાન સત્ત્વગુણની વૃદ્ધિના સમયે– જયકાળે દેવો અને ઋષિઓનો, રજોગુણની વૃદ્ધિના સમયે– જયકાળે અસુરોનો અને તમોગુણની વૃદ્ધિના સમયે– જયકાળે યક્ષો તથા રાક્ષસોનો અભ્યુદય કરે છે.॥૮॥

सत्त्वस्य जयकाले देवादीनृषींश्चाभजत्। तत्तद्देहं प्रविश्य वर्धयतीत्यर्थः। रजसो जयकालेऽसुरान्। तमसो जयकाले यक्षरक्षांसि। तस्य कालस्यानुगुणः सन्॥८॥

સત્ત્વગુણની વૃદ્ધિના સમયે દેવો તથા ઋષિઓનો અભ્યુદય કરે છે. તે દેવ વગેરેના દેહમાં પ્રવેશીને તેઓની વૃદ્ધિ કરે છે, એમ અર્થ છે. રજોગુણની વૃદ્ધિના સમયે અસુરોનો અને તમોગુણની વૃદ્ધિના સમયે યક્ષો તથા રાક્ષસોનો અભ્યુદય કરે છે. તે તે સમયને અનુરૂપ થઈ(તેમ કરે છે.)॥૮॥

समस्यापि निमित्तभेदेन वैषम्ये दृष्टान्तः— **ज्योतिरादिरिव**।

સમાન હોવા છતાં જુદા જુદા નિમિત્તને કારણે વિષમતા થવા માટેનું દૃષ્ટાન્ત— '**ज्योतिः आदिः इव।**'

**ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते।**
**विदन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः॥ ९**

(એક જ હોવા છતાં) અગ્નિ વગેરે જેમ (જુદા જુદા આકારનાં લાકડાંઓમાં જુદો જુદો) જણાય છે, (તેમ ભગવાન પણ એક જ હોવા છતાં અનેક સ્વરૂપવાળા જણાય છે અને દેવ વગેરે શરીરસમૂહરૂપ) સંઘાતથી પૃથક્ જણાતા નથી. (તેમ છતાં) વિચારશીલ જનો કાર્યદર્શનના ચિહ્નથી અનુમાન કરીને અંતતઃ (સ્વભાવવાદ, કાળવાદ, કર્મવાદ વગેરેનો નિષેધ કરીને) પોતાનામાં રહેલા પરમાત્માને જાણે છે.॥૯॥

ज्योतिरग्निर्यथा काष्ठादिषु। जलं यथा पात्रेषु। आकाशो यथा घटादिषु। तथा भगवान्नानारूप आभाति।

‘**ज्योतिः**’ અગ્નિ જેમ (એક જ હોવા છતાં) લાકડાંઓમાં (જુદા જુદા આકારનો જણાય છે,) (એક જ) જળ (અનેક) પાત્રોમાં જેમ (જુદું જુદું જણાય છે) તથા આકાશ જેમ (એક જ હોવા છતાં અનેક) ઘડાઓમાં (અલગ-અલગ જણાય છે), તેમ ભગવાન પણ અનેકરૂપે પ્રતીત થાય છે.

ननु तर्हि तद्वदेव विवेकेन किं न प्रतीयते तत्राह—संघातात्सुरादिदेहान्न विविच्यते न पृथक् प्रतीयते। तर्हि तान्भजतीति कुतो ज्ञायते तत्राह—**विदन्तीति**।

શંકા કરવામાં આવી છે કે કાષ્ઠ વગેરેને કારણે અગ્નિ ભેદજ્ઞાનથી પૃથક્ દેખાય છે, તેમ ભગવાન કેમ પૃથક્રૂપે પ્રતીત થતા નથી? તે માટે ઉત્તર આપે છે – ‘**संघातात्**’ દેવો વગેરેના દેહથી ‘**न विविच्यते**’ (અગ્નિ અને કાષ્ઠની જેમ) જુદા દેખાતા નથી. તો પછી તે દેવ વગેરેનો ભગવાન અભ્યુદય કરે છે, તે કેવી રીતે જાણી શકાય? તે માટે કહે છે— ‘**विदन्ति इति**।’

आत्मस्थं परमात्मानं कवयो निपुणाः मथित्वा कार्यदर्शनलिङ्गेन विचार्य जानन्ति।

આત્મસ્થ પરમાત્માને ‘**कवयः**’ વિદ્વાનો ‘**मथित्वा**’ કાર્યદર્શનના ચિહ્નથી અનુમાન કરીને જાણે છે. (જ્યાં ઘટજ્ઞાનાદિરૂપ કાર્ય થાય, ત્યાં કારણરૂપ ચૈતન્યસ્વરૂપ પરમાત્મા હોય જ.)

अन्ततः स्वभावकालकर्मादिवादनिषेधेन। विन्दन्तीति पाठे लाभोऽपि ज्ञानमेव।

સ્વભાવવાદ, કાળવાદ, કર્મવાદ વગેરેનો નિષેધ કરીને ‘**अन्ततः**’ આખરે પરમાત્માને જાણે છે. ‘**विन्दन्ति**’ પાઠમાં ‘લાભ પામે છે’, લાભ પણ જ્ઞાન જ છે.

अत्रापि ज्योतिरादिरिवेति द्रष्टव्यम्। यथा सूर्यकान्तादौ दाहदर्शनाज्ज्योतिर्ज्ञायते। यथा च गन्धदर्शनाद्वायुरित्यादि॥ ९॥

અહીં પણ (**'विन्दन्ति'** પાઠમાં **विद् गण ६, उभय. जानन्ति**) **'ज्योतिः आदिः'** જેવું જ સમજવું. જેમ સૂર્યકાન્તમણિ વગેરેમાં દાહકશક્તિ જોવાથી અહીં તેજ છે, એમ જણાય છે તથા જેમ ગંધનું જ્ઞાન થવાથી અહીં વાયુ છે, એમ જણાય છે વગેરે.॥૯॥

तदेवं मायागुणवशेनैतद्वैषम्यं न स्वाभाविकमित्युक्तम्, तर्हि गुणपारतन्त्र्याद-नीश्वरत्वमाशङ्क्याह—

આમ, માયાના ગુણોને વશ થવાથી ઈશ્વરમાં આ વિષમતા દેખાય છે તે સ્વાભાવિક નથી, એમ કહેવામાં આવ્યું. તો પછી ગુણોને કારણે ઈશ્વરમાં પરતન્ત્રતા આવતાં ઈશ્વરત્વ કેવી રીતે રહે, એવી આશંકા કરીને (હવે પછીના શ્લોક વડે) સમાધાન કરે છે.

**यदा सिसृक्षुः पुर आत्मनः परो**
**रजः सृजत्येष पृथक् स्वमायया।**
**सत्त्वं विचित्रासु रिरंसुरीश्वरः**
**शयिष्यमाणस्तम ईरयत्यसौ॥ १०**

જ્યારે આ પરમેશ્વર જીવના ભોગ માટે શરીરો સર્જન કરવાની ઈચ્છાવાળા થાય છે, ત્યારે પોતાની માયાથી રજોગુણની અલગ સૃષ્ટિ કરે છે. જ્યારે તે ઈશ્વર જુદાં જુદાં શરીરોમાં ક્રીડા કરવા ઈચ્છે છે, ત્યારે પોતાની માયાથી સત્ત્વગુણની અલગ સૃષ્ટિ કરે છે અને શયન (સંહાર) કરનારા તેઓ તમોગુણને પ્રેરે છે.॥૧૦॥

यदा आत्मनो जीवस्य भोगाय पुरः शरीराणि परः परमेश्वरः सिसृक्षुर्भवति तदा साम्येन स्थितं रजः पृथक् सृजति। विचित्रासु तासु पूर्षु रिरंसुः क्रीडितुमिच्छुर्यदा सत्त्वं तदा पृथक् सृजति। शयिष्यमाणः संहरिष्यन्यदा तदा तमः पृथगीरयति प्रेरयति, आधिक्यं नयतीत्यर्थः॥ १०॥

જ્યારે **'आत्मनः'** જીવના ભોગ માટે **'परः'** પરમેશ્વર **'पुरः'** શરીરો સર્જન કરવાની ઈચ્છાવાળા થાય છે, ત્યારે સમભાવે રહેલા રજોગુણની અલગ સૃષ્ટિ કરે છે. જ્યારે તે જુદાં જુદાં શરીરોમાં ક્રીડા કરવા ઈચ્છે છે, ત્યારે પોતાની માયાથી સત્ત્વગુણની અલગ સૃષ્ટિ કરે છે અને **'शयिष्यमाणः'** (ભવિષ્યમાં શયન કરનારા) તે સંહાર કરે ત્યારે તમોગુણને અલગથી **'ईरयति'** પ્રેરે છે, તમોગુણની અધિકતા કરે છે, એમ અર્થ છે.॥૧૦॥

यदा सिसृक्षुरित्यादिनिर्देशात्प्रतीतं कालपारतन्त्र्यं वारयन् प्रधानपुरुषपारतन्त्र्यमपि वारयति—**कालमिति**।

**'यदा सिसृक्षुः'** (શ્લોક-૧૦માં) નિર્દેશ થયો હોવાથી કાળથી જણાતી પરતન્ત્રતાનું નિવારણ કરતા (પરમેશ્વર) પ્રકૃતિ અને પુરુષથી જણાતી પરતન્ત્રતાને પણ નિવારે છે — **'कालम् इति।'**

**कालं चरन्तं सृजतीश आश्रयं**
**प्रधानपुम्भ्यां नरदेव सत्यकृत्।**
**य एष राजन्नपि काल ईशिता**
**सत्त्वं सुरानीकमिवैधयत्यतः।**
**तत्प्रत्यनीकानसुरान् सुरप्रियो**
**रजस्तमस्कान् प्रमिणोत्युरुश्रवाः॥ ११**

હે નરદેવ, (જગતની ઉત્પત્તિના) નિમિત્તરૂપ પ્રકૃતિ અને પુરુષના સહકારી બને તે રીતે આશ્રયરૂપ એવા વર્તમાનકાળને સત્યસંકલ્પ ઈશ્વર સર્જે છે. હે રાજા, આ જે કાળ છે તે સત્ત્વગુણની વૃદ્ધિ કરે છે, આથી નિયંતા હોવા છતાં પણ ઈશ્વર સત્ત્વગુણપ્રધાન દેવસમૂહની વૃદ્ધિ કરે છે. પરમ યશસ્વી, દેવપ્રિય ભગવાન તે દેવોના પ્રતિપક્ષી એવા રજોગુણ-તમોગુણથી યુક્ત અસુરોનો વિનાશ કરે છે.॥ ૧૧ ॥

हे नरदेव, प्रधानपुंभ्यां निमित्तभूताभ्यां सत्यकृदमोघकर्ता ईशस्तयोः सहकारित्वेनाश्रयभूतं चरन्तं वर्तमानं कालं स्वयमेव सृजति। स्वचेष्टारूपत्वात्कालस्य न तत्पारतन्त्र्यमित्यर्थः। तथापि प्रस्तुते किमायातं तत्राह—

હે નરદેવ (પરીક્ષિત), (જગતની ઉત્પત્તિના) નિમિત્તરૂપ પ્રકૃતિ અને પુરુષ– તે બંનેના સહકારીપણે આશ્રયરૂપ એવા '**चरन्तम्**' વર્તમાનકાળને '**सत्यकृत्**' અમોઘ (સત્ય)સંકલ્પકર્તા ઈશ્વર પોતે જ સર્જે છે. કાળ એ ભગવાનની પોતાની જ ચેષ્ટારૂપ હોવાથી ભગવાન કાળને અધીન નથી, એમ અર્થ છે. તેમ છતાં પ્રસ્તુત વાતમાં શું ફલિત થયું, તે વિષે કહે છે—

य एष कालः सत्त्वमेधयति वर्धयत्यतो हेतोरीशिताऽपीश्वरोऽपि सत्त्वप्रधानं सुरानीकं देवसमूहमेधयतीव। तत्प्रत्यनीकानसुरान्सुर-प्रतिपक्षान् प्रमिणोति हिनस्ति चेत्यन्वयः। उरु प्रभूतं श्रवः कीर्तिर्यस्य सः। कालशक्ति-क्षुभितगुणगतवैषम्यमिह सन्निधिमात्रेण तदधिष्ठातरि स्फुरतीति प्रकरणार्थः॥ ११॥

આ જે કાળ છે તે સત્ત્વગુણ '**एधयति**' વધારે છે ત્યારે '**अतः**' એ કારણે '**ईशिता-अपि**' નિયંતા હોવા છતાં પણ ઈશ્વર સત્ત્વગુણ-પ્રધાન દેવસમૂહની વૃદ્ધિ કરતા હોય તેમ જણાય છે. તે દેવોના '**प्रत्यनीकान्-असुरान्**' પ્રતિપક્ષી અસુરોનો '**प्रमिणोति**' વિનાશ કરે છે, એમ અન્વય છે. '**उरु**' મહાન '**श्रवः**' કીર્તિ છે જેમની તે ભગવાન. કાળશક્તિને કારણે ક્ષોભ (વિકાર) પામેલા ગુણોમાં રહેલી વિષમતા અહીં માત્ર સમીપપણાને કારણે તે ગુણોના અધિષ્ઠાતા ભગવાનમાં સ્ફુરે છે, એમ પ્રકરણનો અર્થ છે.॥ ૧૧ ॥

तदानीं तयोर्न सुरपक्षपातेन वधः किंतु

તે સમયે (હિરણ્યાક્ષ અને હિરણ્યકશિપુ) તે બંનેનો, દેવો ઉપરના પક્ષપાતને કારણે નહીં, પરંતુ બ્રહ્મપુત્ર સનત્કુમારના શાપને કારણે

ब्रह्मशापेनासुरीं योनिं प्राप्तयोरनुग्रहार्थ एवेति वक्तुमितिहासमुपक्षिपति—**अत्रैवेति**।

આસુરીયોનિને પ્રાપ્ત થયેલા તે બંને (દ્વારપાળો જય-વિજય) ઉપર અનુગ્રહ કરવા માટે જ વધ કર્યો હતો, તે ઈતિહાસ રજૂ કરે છે— '**अत्र-एव-इति**।'

**अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा।**
**प्रीत्या महाक्रतौ राजन् पृच्छतेऽजातशत्रवे॥ १२**

હે રાજા, અહીં આ સંદર્ભમાં જ પૂર્વે રાજસૂય મહાયજ્ઞમાં પ્રશ્ન કરતા (તમારા પિતામહ) અજાતશત્રુ યુધિષ્ઠિરને દેવર્ષિ નારદજી દ્વારા ખૂબ પ્રેમથી એક ઈતિહાસ કહેવામાં આવ્યો હતો.॥ ૧૨ ॥

अत्र द्वेषादिरहितस्यापि दैत्यवधे नारदेनेतिहासः प्रस्तावितः॥ १२॥

અહીં ભગવાન દ્વેષાદિથી રહિત હોવા છતાં પણ દૈત્યનો વધ કરે છે, તે વિષયમાં નારદજી દ્વારા ઈતિહાસ પ્રસ્તુત કરવામાં આવ્યો છે.॥ ૧૨ ॥

**दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ।**
**वासुदेवे भगवति सायुज्यं चेदिभूभुजः॥ १३**

**तत्रासीनं सुरऋषिं राजा पाण्डुसुतः क्रतौ।**
**पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम्॥ १४**

રાજસૂય મહાયજ્ઞમાં ચેદિરાજ શિશુપાલનું ભગવાનમાં અતિ અદ્ભુત (ઐક્ય) સાયુજ્ય જોઈને મનમાં આશ્ચર્ય પામી ત્યાં બેઠેલા દેવર્ષિ નારદજીને યજ્ઞપ્રસંગમાં પાંડુપુત્ર રાજા યુધિષ્ઠિરે મુનિઓના સાંભળતાં આ પ્રમાણે પૂછ્યું હતું. ॥ ૧૩ ॥ ૧૪ ॥

चेदिभूभुजः शिशुपालस्य॥ १३॥ १४॥

'**चेदिभूभुजः**' ચેદિરાજ શિશુપાલનું ॥ ૧૩ ॥ ૧૪ ॥

युधिष्ठिर उवाच

**अहो अत्यद्भुतं ह्येतद्दुर्लभैकान्तिनामपि।**
**वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः॥ १५**

**યુધિષ્ઠિર બોલ્યા** – અહો! શિશુપાલ શત્રુ હોવા છતાં અનન્ય ભક્તોને પણ દુર્લભ એવા પરમતત્ત્વ વાસુદેવ ભગવાનમાં તે સાયુજ્ય પ્રાપ્ત કરે, તે ખરેખર, અતિ અદ્ભુત છે!॥ ૧૫॥

एकान्तभक्तानामपि दुर्लभा प्राप्तिर्विद्विषो जातेत्येतदत्यद्भुतं हि॥ १५॥

અનન્ય ભક્તોને પણ દુર્લભ એવી પ્રાપ્તિ શત્રુને થઈ, તે ખરેખર, અતિઅદ્ભુત છે!॥ ૧૫॥

**एतद्वेदितुमिच्छामः सर्व एव वयं मुने।**
**भगवन्निन्दया वेनो द्विजैस्तमसि पातितः॥ १६**

હે મુનિ, ભગવાનની નિંદાથી વેનને બ્રાહ્મણો દ્વારા નરકમાં નાખવામાં આવ્યો હતો, (તો પછી ભગવાનની નિંદા કરનાર આ શિશુપાલને સાયુજ્ય મુક્તિ કેવી રીતે મળી?) તે અમે બધા જ જાણવા ઈચ્છીએ છીએ.॥ ૧૬॥

तस्य तु वेनवन्नरकपात एवोचित इत्याह—भगवन्निन्दयेति। तमसि नरके॥ १६॥

તે શિશુપાલને તો વેનની જેમ નરકમાં જ નાખવો ઉચિત છે, એમ કહે છે— '**भगवन्निन्दया इति।**' '**तमसि**' નરકમાં॥ ૧૬॥

**दमघोषसुतः पाप आरभ्य कलभाषणात्।**
**सम्प्रत्यमर्षी गोविन्दे दन्तवक्त्रश्च दुर्मतिः॥ १७**

દમઘોષનો પાપી પુત્ર શિશુપાલ અને દુર્મતિ દંતવક્ત્ર (બાળપણમાં) તોતડું બોલતા હતા ત્યારથી અત્યાર સુધી પણ શ્રીગોવિંદ પ્રત્યે ક્રોધી (ઈર્ષ્યાળુ) હતા.॥ ૧૭॥

दमघोषस्य सुतः शिशुपालः। कलभाषणाद् बाल्यकोमलभाषणमारभ्य। संप्रत्यधुनाप्यमर्षी क्रोधी मत्सरी वा॥ १७॥

દમઘોષનો પુત્ર શિશુપાલ '**कलभाषणात्**' બાળપણમાં તોતડું બોલતો હતો ત્યારથી, '**सम्प्रति**' અત્યાર સુધી પણ '**अमर्षी**' ક્રોધી કે ઈર્ષ્યાળુ હતો.॥ ૧૭॥

**शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययम्।**
**श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः॥**
**॥ १८॥**

જે અવિનાશી પરબ્રહ્મ છે તે ભગવાન વિષ્ણુને વારંવાર ગાળો દેતા તે બંનેની જીભમાં કોઢ ન નીકળ્યો કે ન તેઓ ઘોર નરકમાં પ્રવેશ્યા.॥ ૧૮॥

श्वित्रः श्वेतकुष्ठम्॥ १८॥

'**श्वित्रः**' શ્વેતકોઢ॥ ૧૮॥

**कथं तस्मिन् भगवति दुरवग्राहधामनि।**
**पश्यतां सर्वलोकानां लयमीयतुरञ्जसा॥ १९**

જેમનું સ્વરૂપ પ્રાપ્ત કરવું અત્યંત કઠણ છે તેવા ભગવાનમાં સર્વ લોકોના દેખતાં (આ બંને) અનાયાસે લય કેવી રીતે પામ્યા?॥ ૧૯॥

दुरवग्राहं दुष्प्रापं धाम स्वरूपं यस्य तस्मिन् लयं सायुज्यमीयतुर्जग्मतुः। अभूतस्यापि दन्तवक्त्रलयस्य तज्जातकप्रामाण्येन सिद्धवन्निर्देशः॥ १९॥

'**दुरवग्राहम्**' દુષ્પ્રાપ્ય, દુર્લભ '**धाम**' સ્વરૂપ છે જેમનું તેમનામાં '**लयम्**' સાયુજ્ય '**ईयतुः**' પામ્યા. દંતવક્ત્રની મુક્તિ થવાની બાકી હોવા છતાં જન્મપત્રિકાના આધારે દંતવક્ત્રની મુક્તિ થઈ હોય તેમ નિર્દેશ છે.॥ ૧૯॥

**एतद् भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना।**
**ब्रूह्येतदद्भुततमं भगवांस्तत्र कारणम्॥ २०**

વાયુ(ની લહેરખીઓ)થી હાલતી દીપશિખાની જેમ મારી બુદ્ધિ ભમે છે. આ અત્યંત આશ્ચર્યકારક ઘટના માટેનું કારણ સર્વજ્ઞ (ભગવાન) એવા આપ (મને) કહો.॥ ૨૦॥

एतदद्भुततममत एतत्प्रति मे धीर्भ्राम्यति। भगवान् सर्वज्ञस्त्वं ब्रूहि॥ २०॥

આ અત્યંત અદ્‌ભુત છે. તેથી આના વિષે મારી બુદ્ધિ ભમે છે. '**भगवान्**' સર્વજ્ઞ એવા આપ કહો.॥ ૨૦॥

श्रीशुक उवाच

**राज्ञस्तद्वच आकर्ण्य नारदो भगवानृषिः।**
**तुष्टः प्राह तमाभाष्य शृण्वत्यास्तत्सदः कथाः॥**
**॥ २१ ॥**

आभाष्य संबोध्य। सीदन्ति निषीदन्त्यस्यामिति सद् सभा तस्याः सदः सदसः शृण्वत्याः सत्याः कथाः प्राहेत्यन्वयः॥ २१॥

अहो भगवन्निन्दकस्य नरकपातेन भाव्यमिति वदतस्तव कोऽभिप्रायः। भगवत्पीडाकरत्वेन वा तदभावेऽपि सुरापानादिवन्निषिद्धनिन्द्याचरणाद्वा तत्र तावद्देहाभिमानकृतनिन्दादिनिमित्तत्वात्पीडादीनां भगवतश्च तदभावान्न पीडाशङ्कास्तीत्याह—**निन्दनेति सार्धैस्त्रिभिः**।

**શ્રીશુકદેવજી બોલ્યા** – રાજા (યુધિષ્ઠિર)નું તે વચન સાંભળી દેવર્ષિ ભગવાન નારદ પ્રસન્ન થયા અને તે સભાના સાંભળતાં જ તેમને (યુધિષ્ઠિરને) સંબોધીને કથા કહેવા લાગ્યા.॥ ૨૧ ॥

**'आभाष्य'** સંબોધીને, જેમાં (લોકો) બેસે છે (અને સાંભળે છે) તે સભા, તેના **'सदः'** સભાના સાંભળતાં કથા કહે છે, એમ અન્વય છે.॥ ૨૧ ॥

અહો! ભગવાનની નિંદા કરનાર નરકમાં પડવો જોઈએ, એમ કહેતા એવા તમારો કયો અભિપ્રાય છે? નિંદક, ભગવાનને પીડા કરનાર હોવાથી (તે નરકમાં પડવો જોઈએ)? કે પછી ભગવાનને પીડા ન થતી હોય તો પણ મદ્યપાનાદિ જેવા નિષિદ્ધ કે નિંદ્ય આચરણથી (તે નરકમાં પડવો જોઈએ)? ભગવાનમાં દેહાભિમાનાદિ ન હોવાથી દેહાભિમાનપ્રયુક્ત નિંદા વગેરેના નિમિત્તથી જે પીડાદિ થાય તેનો અભાવ હોવાથી તેની શંકા નથી, એમ સાડાત્રણ શ્લોકોથી કહે છે — **'निन्दन इति।'**

नारद उवाच

**निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम्।**
**प्रधानपरयो राजन्नविवेकेन कल्पितम्॥ २२**

निन्दनं दोषकीर्तनम्। न्यक्कारस्तिरस्कारः। निन्दास्तुत्यादिज्ञानार्थं प्रधानपुरुषयोरविवेकेन कलेवरं कल्पितं रचितम्॥ २२॥

**वि.चक्र.**—निन्दनस्तवौ वाचिकौ दोषगुणौ, सत्कारन्यक्कारौ कायिकौ मानसौ च।

**નારદજી બોલ્યા** – હે રાજા (યુધિષ્ઠિર), નિંદા-સ્તુતિ, સત્કાર-તિરસ્કાર (વગેરેની અનુભૂતિ) માટે (જીવોનું) શરીર પ્રકૃતિ અને પુરુષના અવિવેકથી રચાયું છે.॥ ૨૨ ॥

**'निन्दनम्'** દોષકથન, **'न्यक्कारः'** તિરસ્કાર, નિંદા-સ્તુતિ (સુખ-દુઃખ) વગેરેની અનુભૂતિ માટે જીવોનું શરીર પ્રકૃતિ અને પુરુષના (પરસ્પર અધ્યાસને કારણે થતા) અવિવેકથી **'कल्पितम्'** રચાયું છે.॥ ૨૨ ॥

નિન્દા અને સ્તુતિ વાણીના દોષ-ગુણ છે, સત્કાર અને તિરસ્કાર શરીરના અને મનના છે.

**हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा।**
**वैषम्यमिह भूतानां ममाहमिति पार्थिव॥ २३**

હે પાર્થિવ (રાજા યુધિષ્ઠિર), આ સંસારમાં મનુષ્યોને તે શરીરાભિમાનને કારણે જેમ 'હું અને મારું' એવો વિષમ ભાવ જન્મે છે, તેનાથી કાયિક દંડ અને વાચિક નિંદારૂપ તિરસ્કાર થવાને કારણે હિંસા થાય છે (તેમ ઈશ્વરને છે નહીં).॥ ૨૩॥

तदभिमानेन भूतानां यथा ममाहमिति वैषम्यं तत्कृतं हिंसादिकं च भवति तथा न यस्येत्युत्तरेणान्वयः। दण्डस्ताडनं पारुष्यं निन्दा तयोर्हेतुभूतयोर्हिंसा पीडा च भवति॥ २३॥

તે શરીરના અભિમાનને લીધે પ્રાણીઓને જેમ 'હું અને મારું' એવો વિષમ ભાવ જન્મે છે અને તેને કારણે હિંસાદિ થાય છે, તેમ જેમને (ઈશ્વરને) થતા નથી, એમ પછીના શ્લોક (૨૪) સાથે સંબંધ છે. '**दण्डः**' તાડના અને '**पारुष्यम्**' નિંદા– તે બંનેને કારણે હિંસા-પીડા થાય છે.॥ ૨૩॥

**यन्निबद्धोऽभिमानोऽयं तद्वधात्प्राणिनां वधः।**
**तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः।**
**परस्य दमकर्तुर्हि हिंसा केनास्य कल्प्यते॥ २४**

જે શરીરમાં આ અભિમાન બંધાઈ ગયું છે તે શરીરના વધથી પ્રાણીઓને પોતાનો વધ જણાય છે. જીવો જેવું દેહાભિમાન, અદ્વિતીય હોવાથી જે સર્વાત્માને નથી તે, દૈત્યોનું દમન કરનાર આ પરમેશ્વરમાં હિંસાદિની કલ્પના કોઈ પણ પ્રકારે કરી શકાય ખરી?॥ ૨૪॥

यस्मिन्निबद्धोऽयमभिमानस्तस्य देहस्य वधाद्वधश्च यथा तथा यस्याभिमानो नास्ति। अतोऽस्य परमेश्वरस्य हिंसा केन हेतुना कल्प्यते न केनापीति। अभिमानाभावे हेतुः—कैवल्याद-द्वितीयत्वेनाभिमन्तव्याभावात्।

જે શરીરમાં આ અભિમાન બંધાઈ ગયું છે તે શરીરના નાશથી પ્રાણીઓને જેમ પોતાનો નાશ જણાય છે, તેમ જેમને દેહાભિમાન નથી. આથી આ પરમેશ્વરમાં કયા કારણે હિંસા(નો ભાવ) કલ્પી શકાય? કોઈ પણ કારણે નહીં. ઈશ્વરને અભિમાન ન હોવા માટેનું કારણ– '**कैवल्यात्**' અદ્વિતીય હોવાથી તેમને અભિમાન નથી, તેથી (હિંસાદિ ભાવ નથી).

वैषम्याभावे हेतुः—अखिलात्मनः सर्वात्मन इति। तर्हि किमिति हन्ति

('હું અને મારું' એવું) વૈષમ્ય ન હોવા માટેનું કારણ– '**अखिलात्मनः**' સર્વના આત્મા એવા ઈશ્વરને, (સર્વાત્મા હોવાથી વૈષમ્ય નથી.) તો પછી દૈત્યોને કેમ હણે છે? તે માટે ઉત્તર

दैत्यांस्तत्राह—परस्य दमकर्तुः हितार्थं दण्डं करोतीत्यर्थः ॥ २४ ॥

આપે છે — '**परस्य दमकर्तुः**' દમન કરનાર પરમેશ્વર દૈત્યોને હિત માટે શિક્ષા કરે છે, એમ અર્થ છે. ॥ २४ ॥

यस्माद्भगवतो निन्दादिकृतवैषम्यं नास्ति तस्माद्येन केनाप्युपायेन ध्यायतस्तेनैव ध्यानेन निन्दादिकृतपापस्यापि नाशात्सायुज्यं युक्तमित्याशयेनाह—**तस्मादिति** सप्तभिः ।

કારણ કે ભગવાનને નિંદા વગેરેને લીધે વિષમભાવ નથી થતો, તેથી કોઈ પણ રીતે (ભગવાનનું) ધ્યાન કરતો મનુષ્ય તે જ ધ્યાનથી નિંદાદિને કારણે થતા પાપનો પણ નાશ થવાથી તેનું સાયુજ્ય થાય તે યોગ્ય છે, એ આશયથી સાત શ્લોકો વડે કહે છે — '**तस्मात् इति।**'

**तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा।**
**स्नेहात्कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक् ॥**
**॥ २५ ॥**

માટે સુદૃઢ વેરભાવથી, વેરરહિત (ભક્તિ-) ભાવથી, ભયથી, સ્નેહથી કે કામનાથી, કોઈ પણ રીતે (મનને ભગવાનમાં) જોડી દેવું જોઈએ (જેથી મન ભગવાન સિવાય) બીજું કાંઈ જોતું નથી. ॥ २४ ॥

निर्वैरेण नास्ति वैरं केनापि यस्मिंस्तेन भक्तियोगेनेत्यर्थः। युञ्ज्यान्मन इति शेषः। यस्मादेतैरुपायैः पृथङ्नेक्षते ॥ २५ ॥

'**निर्वैरेण**' જેમાં કોઈ પણ રીતે વેર નથી તે ભક્તિયોગ દ્વારા, એમ અર્થ છે. મનને જોડી દેવું જોઈએ, એટલું બાકી છે (તે ઉમેરવું). જેથી આ ઉપાયોને કારણે મન (ભગવાન સિવાય) બીજી વસ્તુને જોતું નથી. ॥ २५ ॥

तेष्वपि वैरानुबन्धः श्रेष्ठ इत्याह—**यथेति** ।

તે સર્વ (ઉપાયો)માં સુદૃઢ વેરભાવ (અતિ નિંદ્ય હોવા છતાં પણ–વં.) શ્રેષ્ઠ છે, એમ કહે છે.

**यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात्।**
**न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ २६**

સુદૃઢ વેરભાવથી મનુષ્ય જેવી તન્મયતા પ્રાપ્ત કરે છે, તેવી ભક્તિયોગથી પ્રાપ્ત નથી કરતો, એવી મારી દૃઢ માન્યતા છે. ॥ २६ ॥

न तथा भक्तियोगेनापि ॥ २६ ॥

તેવી તન્મયતા ભક્તિયોગથી પણ પ્રાપ્ત થતી નથી. ॥ २६ ॥

अत्र दृष्टान्तः—कीटः **पेशस्कृता** भ्रमरेण।

અહીં દૃષ્ટાન્ત આપે છે – '**पेशस्कृता**' ભમરા દ્વારા પુરાયેલો કીડો

**कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन्।**
**संरम्भभययोगेन विन्दते तत्सरूपताम् ॥ २७**

ભમરા દ્વારા ભીંતમાં (કરાયેલા પોતાના દરમાં) પુરાયેલો કીડો દ્વેષ અને ભયના ભાવસંબન્ધથી તે ભમરાનું જ સ્મરણ કરતો તેના જેવા સ્વરૂપને જ પામે છે. ॥ २७ ॥

संरम्भो द्वेषो भयं च स एव योगस्तेन ॥ २७ ॥

**एवं कृष्णे भगवति मायामनुज ईश्वरे।**
**वैरेण पूतपाप्मानस्तमापुरनुचिन्तया॥ २८**

वैरेण यानुचिन्ता चिन्तनं तयैव पूतः पाप्मा येषां ते तं प्रापुः॥ २८॥

**कामाद् द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः।**
**आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः॥ २९**

तदघं कामादिनिमित्तं पापं हित्वा॥ २९॥

तानाह—**गोप्य इति**।

**गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः।**
**सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो॥**
**॥ ३०॥** ३०॥

तर्हि वेनः किमिति नरके पातितः। तीव्रध्यानाभावात्पापमेव तस्य फलितमित्याह—**कतमोऽपीति**।

'**संरम्भः**' द्वेष અને ભય સાથે હોવો તે સંરંભ, તેના લીધે॥ ૨૭॥

એ જ રીતે માયાથી મનુષ્ય બનેલા ઈશ્વર ભગવાન શ્રીકૃષ્ણ વિષે વેરભાવથી તેમનું સતત ચિંતન કરવા દ્વારા પાપરહિત થયેલા (શિશુપાલાદિ) મનુષ્યો તે ભગવાનને પામ્યા છે.॥ ૨૮॥

વેરભાવથી જે '**अनुचिन्ता**' સતત ચિંતન થાય છે, તેનાથી જ પવિત્ર થયું છે પાપ જેમનું તેઓ તે ભગવાનને પામ્યા છે.॥ ૨૮॥

જેવી રીતે ભક્તિથી ઈશ્વરમાં મન પરોવીને ઘણા (ભક્તો) તેમની (ભગવાનની) ગતિને પ્રાપ્ત થયા છે, તેવી રીતે કામથી, દ્વેષથી, ભયથી, સ્નેહથી ભગવાનમાં મન જોડીને તે (કામાદિજનિત) પાપને છોડીને અનેક મનુષ્યો તે ગતિને પામ્યા છે.॥ ૨૯॥

'**तत्-अघम्**' તે કામાદિને કારણે થયેલા પાપને છોડીને॥ ૨૯॥

તે ભગવાનને પ્રાપ્ત કરનારાઓનું જ વર્ણન કરે છે— '**गोप्यः इति।**'

હે વિભુ, ગોપીઓએ ભગવાનને તીવ્ર કામનાથી પ્રાપ્ત કર્યા, કંસે ભગવાનને ભયથી પ્રાપ્ત કર્યા, શિશુપાલાદિ રાજાઓએ દ્વેષથી, યાદવોએ (પરિવારના) સંબંધથી, તમે (યુધિષ્ઠરે) સ્નેહથી અને અમે ભક્તિથી ભગવાનને પામ્યા છીએ.॥ ૩૦॥ ૩૦॥

તો પછી વેનને કેમ નરકમાં નાખ્યો? તીવ્ર ધ્યાનના અભાવને કારણે તેને ફળરૂપે પાપ જ મળ્યું, એમ કહે છે — '**कतमः अपि इति।**'

**कतमोऽपि न वेनः स्यात्पञ्चानां पुरुषं प्रति।**
**तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्॥ ३१**

(ભક્તો ઉપરાંત ભગવાનનું ચિંતન કરનારા ઉપર્યુક્ત) પાંચ પ્રકારોમાં વેન કોઈ પણ પ્રકારનો ન હતો, (કારણ કે તેણે કોઈ પણ રીતે પોતાનું મન ભગવાનમાં જોડ્યું ન હતું.) માટે કોઈ પણ ઉપાયથી મનને કૃષ્ણમાં પરોવી દેવું જોઈએ.॥ ૩૧ ॥

पुरुषं श्रीहरिं प्रति। पुरुषे पुरुषस्य कामासंभवाद्भयादिभिश्चिन्तयतां पञ्चानां मध्ये वेनो न कतमोऽपीत्युक्तम्॥ ३१ ॥

(વેન) '**पुरुषम्**' શ્રીહરિનું (ચિંતન કરતો ન હતો). પુરુષ (પરમેશ્વર) ઉપર પુરુષનો (વેનનો) કામભાવ થવો અસંભવ હોવાથી ભય વગેરે દ્વારા ચિંતન કરનારાઓના પાંચ પ્રકારોમાં વેન કોઈ પણ પ્રકારનો ન હતો, એમ કહેવાયું છે.॥ ૩૧ ॥

तदेवमितिहासप्रस्तावकथामुक्त्वा श्रीकृष्णे शिशुपालस्य वैरानुबन्धे को हेतुरित्यपेक्षायां तमेवेतिहासं वक्तुमाह—**मातृष्वस्रेय इति**।

આ પ્રમાણે ઈતિહાસના આરંભની કથા કહીને શ્રીકૃષ્ણ ઉપર શિશુપાલનો વેરભાવ હોવા માટે શું કારણ હતું, એવી અપેક્ષાથી તે જ ઈતિહાસ વર્ણવવા માટે કહે છે — '**मातृष्वस्रेयः इति**।'

**मातृष्वस्रेयो वश्चैद्यो दन्तवक्त्रश्च पाण्डव।**
**पार्षदप्रवरौ विष्णोर्विप्रशापात्पदाच्च्युतौ॥ ३२**

હે પાંડુનંદન, તમારી માસીનો પુત્ર શિશુપાલ અને દંતવક્ત્ર (પૂર્વે) ભગવાન વિષ્ણુના મુખ્ય પાર્ષદો હતા, (પરંતુ) વિપ્ર (સનત્કુમાર)ના શાપને કારણે વૈકુંઠપદમાંથી નીચે પડ્યા છે.॥ ૩૨ ॥

पदाद्वैकुण्ठाच्च्युतौ॥ ३२ ॥

'**पदात्**' વૈકુંઠપદમાંથી બંને જણા નીચે પડ્યા છે.॥ ૩૨ ॥

युधिष्ठिर उवाच

**कीदृशः कस्य वा शापो हरिदासाभिमर्शनः।**
**अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः॥ ३३**

**યુધિષ્ઠિર બોલ્યા** – શ્રીહરિના દાસોને પણ અભિભૂત કરનાર શાપ કેવો હતો અને કોનો હતો? શ્રીહરિના અનન્ય ભક્તોને જન્મ (-મરણરૂપ સંસાર) થાય એ (અસંભવિત હોવાથી) વિશ્વાસ ન પડે તેવું લાગે છે.॥ ૩૩॥

हरिदासावभिमृशत्यभिभवतीति तथा। कस्य शापः। कीदृशो वा। अश्रद्धेयोऽनादरणीय इव असंभवात्। भवो जन्म॥ ३३॥

**देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्।**
**देहसम्बन्धसम्बद्धमेतदाख्यातुमर्हसि ॥ ३४**

असंभवमेवाह—जन्महेतुभूतैः प्राकृतैर्देहेन्द्रियासुभिर्हीनानाम्। शुद्धसत्त्वमयदेहानामित्यर्थः। प्राकृतदेहसंबन्धेन संबद्धमेतदाख्यानमाख्यातुमर्हसि॥ ३४॥

नारद उवाच

**एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया।**
**सनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम्॥ ३५**

॥ ३५॥

**पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः।**
**दिग्वाससः शिशून् मत्वा द्वाःस्थौ तान् प्रत्यषेधताम्॥**
**॥ ३६॥**

कथंभूताः। पञ्च वा षड्वा हायनानि वर्षाणि येषां ते। अर्भा बालास्तद्वदाभा येषां ते। पूर्वेषां मरीच्यादीनामपि पूर्वजास्तेभ्यः प्रथमं जाताः। दिग्वाससो दिगम्बराः अतः शिशून्मत्वा ॥ ३६॥

શ્રીહરિના બંને દાસ (પણ) '**अभिमृशति।**' અભિભૂત થાય તેવો શાપ કોનો અથવા કેવો હતો? '**अश्रद्धेयः**' અનાદરણીય લાગે છે કારણ કે અસંભવિત છે. '**भवः**' જન્મ॥ ૩૩॥

દેહ, ઈન્દ્રિય અને પ્રાણથી રહિત એવા, વૈકુંઠપુરમાં વસનારાઓને પ્રાકૃત દેહનો સંબંધ બંધાયો એ કહેવા માટે આપ યોગ્ય છો.॥ ૩૪॥

(તે બંનેનો ભૂલોકમાં જન્મ થવો) અસંભવ જ છે, તેમ કહે છે— જન્મના કારણરૂપ પ્રાકૃત દેહ, ઈન્દ્રિયો અને પ્રાણથી રહિત જનોને– શુદ્ધ સત્ત્વમય દેહધારીઓને, એમ અર્થ છે. પ્રાકૃત દેહના સંબંધથી બંધન થયું તે આખ્યાન કહેવા માટે આપ યોગ્ય છો.॥ ૩૪॥

**નારદજી બોલ્યા** – એક દિવસ બ્રહ્માજીના સનંદનાદિ ચાર પુત્રો ત્રણેય લોકમાં વિચરણ કરતા, દૈવયોગે વિષ્ણુલોકમાં ગયા. ॥ ૩૫॥ ૩૫॥

તેઓ પાંચ-છ વર્ષના બાળક જેવી કાન્તિવાળા, (બાલ્યાવસ્થામાં રહેલા હોવા છતાં) પૂર્વે થઈ ગયેલા (મરીચિ વગેરે) ઋષિઓની પણ પૂર્વે જન્મેલા અને દિશાઓરૂપી વસ્ત્ર ધારણ કરનારા છે. શિશુઓ માનીને બંને દ્વારપાળોએ તેમને રોક્યા.॥ ૩૬॥

(સનન્દનાદિ બ્રહ્મપુત્રો) કેવા છે? પાંચ કે છ '**हायनानि**' વર્ષો જેમને છે તેઓ, '**अर्भाः**' બાળકો, તેમના જેવી આભા છે જેમની તેઓ, '**पूर्वेषाम्**' પૂર્વે થઈ ગયેલા મરીચિ વગેરે ઋષિઓની પણ પૂર્વે જન્મેલા– '**दिक्-वाससः**' દિશાઓરૂપી વસ્ત્રવાળા અથવા દિગમ્બર, તેથી બાળક સમજીને॥ ૩૬॥

**अशपन् कुपिता एवं युवां वासं न चार्हथः ।**
**रजस्तमोभ्यां रहिते पादमूले मधुद्विषः ।**
**पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ॥ ३७**

એટલે કુપિત થયેલા સનત્કુમારોએ તે બંનેને આ પ્રમાણે શાપ આપ્યો– 'મધુસૂદન ભગવાનના, રજોગુણ અને તમોગુણથી રહિત ચરણના આશ્રયમાં તમે બંને રહેવાને પણ યોગ્ય નથી. (તો પછી સેવાનો તો પ્રશ્ન જ ક્યાંથી હોય?) માટે હે મૂર્ખાઓ, અત્યંત પાપી એવી આસુરી યોનિમાં તમે બંને અહીંથી જલદી ચાલ્યા જાઓ!' ॥ ૩૭ ॥

वासमपि नार्हथः, कुतः पुनस्तत्सेवा–मिति चकारार्थः। हे बालिशौ। अतो हेतोराशु यातम् ॥ ३७ ॥

તમે બંને અહીં રહેવાને પણ લાયક નથી, તો તેમની સેવાને યોગ્ય તો ક્યાંથી હો? એમ 'ચ'કારનો અર્થ છે. હે મૂર્ખ દ્વારપાળો, આ કારણે તમે જલદી જાઓ. ॥ ૩૭ ॥

**एवं शप्तौ स्वभवनात् पतन्तौ तैः कृपालुभिः ।**
**प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम् ॥ ३८**

આ પ્રમાણે શાપિત થયેલા અને પોતાના વૈકુંઠધામથી પડતા તે બંને દ્વારપાળોને કૃપાળુ એવા તે સનત્કુમારો દ્વારા ફરીથી કહેવામાં આવ્યું કે 'તમારા બંનેના ત્રણ જન્મો પછી (વૈકુંઠ) લોકની પ્રાપ્તિ માટે તમે સમર્થ થશો.' ॥ ૩૮ ॥

वां युवयोस्त्रिभिर्जन्मभिः। लोकाय स्वस्थानप्राप्तये कल्पतां तावतायं शापः समाप्यतामिति पुनः प्रोक्तावित्यर्थः ॥ ३८ ॥

**'वाम्'** તમારા બંનેના ત્રણ જન્મો પછી **'लोकाय'** પોતાનો (વૈકુંઠ)લોક પ્રાપ્ત કરવા માટે તમે સમર્થ થશો. ત્યાં સુધી આ શાપ ભોગવો, એમ ફરીથી તે બંનેને કહેવામાં આવ્યું, એમ અર્થ છે. ॥ ૩૮ ॥

**जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ ।**
**हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥ ३९**

॥ ३९ ॥

દૈત્યો અને દાનવોથી વંદન કરાયેલા તે બંને દિતિના પુત્રો તરીકે જન્મ્યા. તે બંનેમાં મોટો હિરણ્યકશિપુ અને નાનો હિરણ્યાક્ષ હતો. ॥ ૩૯ ॥ ૩૯ ॥

**हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा ।**
**हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः ॥ ४०**

નૃસિંહરૂપ શ્રીહરિ દ્વારા હિરણ્યકશિપુ હણાયો હતો અને પૃથ્વીના ઉદ્ધાર સમયે વરાહ રૂપ ધારણ કરનાર શ્રીહરિ દ્વારા પૃથ્વીના ઉદ્ધારમાં (અંતરાયરૂપ એવા તેમનો પ્રતિઘાતી) હિરણ્યાક્ષ હણાયો હતો. ॥ ૪૦ ॥

धरोद्धारनिमित्ते तत्प्रतिघाती हतः ॥ ४० ॥

પૃથ્વીના ઉદ્ધાર નિમિત્તે તેમાં અંતરાયરૂપ બનેલો હિરણ્યાક્ષ હણાયો હતો. ॥ ૪૦ ॥

हिरण्यकशिपोर्वधे कारणं सूचयति— **हिरण्यकशिपुः** पुत्रमिति।

હિરણ્યકશિપુના વધ માટેનું કારણ સૂચવે છે — હિરણ્યકશિપુએ પુત્રને (તીવ્ર વેદના પહોંચાડી ત્યારે)

**हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम्।**
**जिघांसुरकरोन्नाना यातना मृत्युहेतवे॥ ४१ ॥ ४१ ॥**

ભગવાન કેશવને પ્રિય એવા પોતાના પુત્ર પ્રહ્લાદને મારવાની ઈચ્છાવાળા હિરણ્યકશિપુએ તેને મારી નાખવા માટે જ્યારે અનેક જાતનાં દુઃખો આપ્યાં (ત્યારે તે શ્રીહરિ દ્વારા હણાયો). ॥ ૪૧ ॥ ૪૧ ॥

**सर्वभूतात्मभूतं तं प्रशान्तं समदर्शनम्।**
**भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः॥ ४२**

સર્વ પ્રાણીઓના આત્મસ્વરૂપ, અત્યંત શાંત, (સર્વમાં સમાનરૂપે રહેલા બ્રહ્મનાં દર્શન કરનાર) સમદર્શી અને ભગવાનના પ્રભાવથી સદાય વ્યાપ્ત તે પ્રહ્લાદને (જાત જાતના) ઉપાયો કરીને પણ (હિરણ્યકશિપુ) મારવાને સમર્થ થયો નહીં. ॥ ૪૨ ॥

सर्वभूतानामात्मभूतम्। कुतः। समं ब्रह्मैव पश्यतीति तथा तम्। अतः प्रशान्तं द्वेषादिरहितम्। अत एव भगवत्तेजसा स्पृष्टं व्याप्तम्। उद्यमैः शस्त्रास्त्रप्रहारादिभिः॥ ४२ ॥

સર્વ પ્રાણીઓના આત્મસ્વરૂપ એવા પ્રહ્લાદને – પ્રહ્લાદજી શા માટે સર્વ પ્રાણીઓના આત્મસ્વરૂપ હતા? બ્રહ્મને સર્વમાં સમાનરૂપે રહેલું જુએ તેવા તેમને – આથી '**प्रशान्तम्**' દ્વેષાદિથી રહિત અત્યંત શાંતને– આથી જ, ભગવાનના તેજથી '**स्पृष्टम्**' વ્યાપ્ત એવા તેમને '**उद्यमैः**' શસ્ત્ર, અસ્ત્ર, પ્રહાર વગેરેથી ॥ ૪૨ ॥

**ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवःसुतौ।**
**रावणः कुम्भकर्णश्च सर्वलोकोपतापनौ॥ ४३**

(હિરણ્યકશિપુ અને હિરણ્યાક્ષ નામનાં શરીરોનો ત્યાગ કર્યા) પછી તે બંને કેશિનીમાં રાવણ અને કુંભકર્ણ નામના વિશ્રવાના પુત્ર, સર્વ લોકને દુઃખી કરનારા રાક્ષસો થયા. ॥ ૪૩ ॥

विश्रवसः सुतौ॥ ४३ ॥

વિશ્રવાના બે પુત્રો (થયા). ॥ ૪૩ ॥

**तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये।**
**रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात् प्रभो॥ ४४**

તે સમયે પણ રઘુકુળમાં રામચન્દ્રરૂપે અવતરીને (ભગવાને તે બંનેને) શાપથી મુક્ત કરવા માટે હણ્યા હતા. હે પ્રભુ (યુધિષ્ઠિર), શ્રીરામચન્દ્ર ભગવાનનું પરાક્રમ તમે *માર્કંડેય ઋષિના મુખેથી શ્રવણ કરશો.॥ ૪૪॥

न्यहनत्, हतवानित्यर्थः। तर्हि तदेव कथनीयमित्युत्सुकं प्रत्याह—**रामवीर्यमिति** ॥ ४४॥

**'न्यहनत्'** હણ્યા હતા, એમ અર્થ છે. તો પછી ભગવાન રામની જીવનકથા જ કહેવા યોગ્ય છે, એમ ઉત્સુક એવા યુધિષ્ઠિરને કહે છે— **'रामवीर्यम् इति।'**॥ ૪૪॥

**तावेव क्षत्रियौ जातौ मातृष्वस्त्रात्मजौ तव।**
**अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ॥ ४५**

તે જ બંને (જય-વિજય) અત્યારે તમારી માસીના પુત્રો (શિશુપાળ અને દંતવક્ત્ર નામે) ક્ષત્રિયરૂપે જન્મ્યા અને ભગવાન શ્રીકૃષ્ણના સુદર્શનચક્ર(ના સ્પર્શ)થી નિષ્પાપ થઈ શાપમુક્ત થયા છે.॥ ૪૫॥

कृष्णचक्रेण हतमंहो ययोस्तौ। तयोः पापमेव हतं न तु तावित्यर्थः॥ ४५॥

શ્રીકૃષ્ણના ચક્રથી નષ્ટ થયું છે પાપ જેમનું તેવા તે બંને— તે બંનેનું પાપ જ નષ્ટ થયું છે, તે બંને નહીં, એમ અર્થ છે.॥ ૪૫॥

**वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम्।**
**नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ॥ ४६**

॥ ४६॥

વેરભાવથી તીવ્ર બનેલા ધ્યાનથી (નિરંતર ચિંતનથી) અચ્યુત ભગવાનમાં સાયુજ્ય પ્રાપ્ત કરીને પુનઃ વિષ્ણુ ભગવાનના પાર્ષદો (થઈ) તે બંને શ્રીહરિની પાસે ગયા.॥ ૪૬॥ ૪૬॥

युधिष्ठिर उवाच

**विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि।**
**ब्रूहि मे भगवन्येन प्रह्लादस्याच्युतात्मता॥ ४७**

**યુધિષ્ઠિર બોલ્યા** — મહાત્મા એવા (પોતાના) પ્રિય પુત્ર (પ્રહ્લાદ) ઉપર (હિરણ્યકશિપુને) દ્વેષ કેમ થયો હતો? હે ભગવાન (નારદજી), પ્રહ્લાદજીને જે કારણથી શ્રીઅચ્યુત ભગવાન સાથે તાદાત્મ્ય થઈ ગયું હતું, તે કારણ પણ કહો.॥ ૪૭॥

---

* શ્રીમહાભારતમાં વનપર્વમાં રામોપાખ્યાનપર્વ અ-૨૧૩ થી અ-૨૯૧માં માર્કંડેય ઋષિ દ્વારા યુધિષ્ઠિરને રામચરિત્ર સંભળાવવામાં આવ્યું છે.

येन कारणेन प्रह्लादस्याच्युतात्मता–च्युतैकचित्तत्वं तदपि ब्रूहीति शेषः॥ ४७॥

જે કારણથી પ્રહ્‌લાદને '**अच्युत-आत्मता**' અચ્યુત ભગવાનમાં એકચિત્તપણું પ્રાપ્ત થયું હતું, 'તે પણ' કહો, એટલું શેષ છે.॥ ૪૭॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां सप्तमस्कन्धे प्रह्लादचरितोपक्रमे प्रथमोऽध्यायः॥ १॥
इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे श्रीधरस्वामिविरचितायां
भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः॥ १॥

❋❋❋❋❋

# अथ द्वितीयोऽध्यायः

## હિરણ્યાક્ષનો વધ અને હિરણ્યકશિપુનું સૌને સાન્ત્વન

द्वितीये विष्णुरोषेण लोकं विप्लाव्य दानवैः।
तद्धतभ्रातृपुत्रादीनितिहासैरसान्त्वयत् ॥ १

(ભગવાન) વિષ્ણુ ઉપરના રોષને કારણે દાનવો દ્વારા લોકને વ્યાકુળ કરાવીને હિરણ્યકશિપુએ તે વિષ્ણુ દ્વારા હણાયેલા ભાઈ (હિરણ્યાક્ષ)ના પુત્રાદિને બનેલી ઘટનાઓ વડે સાન્ત્વન આપ્યું.॥ ૧॥

भगवद्द्वेष एव तद्द्वेषेऽपि कारण–मित्याशयेनाह—**भ्रातरीत्यादिना**।

ભગવાન પ્રત્યેનો દ્વેષ જ તેના (પ્રહ્‌લાદ) ઉપરના દ્વેષનું પણ કારણ છે, એ આશયથી કહે છે— '**भ्रातरि**' વગેરે દ્વારા.

नारद उवाच

**भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना।**
**हिरण्यकशिपू राजन् पर्यतप्यद्रुषा शुचा॥ १**

**નારદજી બોલ્યા** – હે રાજા (યુધિષ્ઠિર), વરાહમૂર્તિ શ્રીહરિ દ્વારા આમ, (દેવો ઉપર પક્ષપાતને કારણે) ભાઈ (હિરણ્યાક્ષ) હણાયો, ત્યારે (ભગવાન ઉપરના) રોષને કારણે અને (ભાઈના હણાવાથી) શોકને કારણે હિરણ્યકશિપુ સંતાપ કરવા લાગ્યો.॥ ૧॥

एवं देवपक्षपातेन॥ १॥

'**एवम्**' આમ, દેવો ઉપર પક્ષપાતને કારણે॥ ૧॥

**आह चेदं रुषाऽऽघूर्णः सन्दष्टदशनच्छदः।**
**कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन् धूम्रमम्बरम्॥ २**

જેના ઓષ્ઠ (ક્રોધને કારણે દાંત વડે) પિસાઈ ગયા છે તેવો, ક્રોધથી ધ્રૂજતો, અતિશય ક્રોધથી સળગતાં નેત્રો(ની આગના ધુમાડા)થી ધુમ્મિલ થયેલા આકાશને જોતો (હિરણ્યકશિપુ) આ પ્રમાણે કહેવા લાગ્યો.॥ ૨॥

कोपेन उत् अतिशयेन ज्वलद्भ्याम् कोपाग्निधूमेनैव धूम्रमम्बरं निरीक्षमाणः॥ २॥

ક્રોધથી '**उत्**' અતિશય સળગતાં નેત્રો(ની આગ)થી ક્રોધાગ્નિના ધુમાડાથી જ ધુમ્મિલ થયેલા આકાશને જોતો હિરણ્યકશિપુ॥ ૨॥

**करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः।**
**शूलमुद्यम्य सदसि दानवानिदमब्रवीत्॥ ३**

વિકરાળ દાઢોથી યુક્ત ઉગ્ર દૃષ્ટિને કારણે જોઈ ન શકાય તેવી ભ્રૂકુટિવાળું મુખ છે જેનું તે હિરણ્યકશિપુએ ત્રિશૂળ ઉગામી સભામાં દાનવોને આ પ્રમાણે કહ્યું.॥ ૩॥

करालदंष्ट्राभिर्युक्तयोगया दृष्ट्या। दुष्प्रेक्ष्यं भ्रुकुटीयुक्तं मुखं यस्य सः॥ ३॥

વિકરાળ દાઢોથી યુક્ત હોવાથી ઉગ્ર દૃષ્ટિને કારણે જોઈ ન શકાય તેવી ભ્રૂકુટિવાળું મુખ છે જેનું તે.॥ ૩॥

**भो भो दानवदैतेया द्विमूर्धंस्त्र्यक्ष शम्बर।**
**शतबाहो हयग्रीव नमुचे पाक इल्वल॥ ४**
॥ ४॥
**विप्रचित्ते मम वचः पुलोमन् शकुनादयः।**
**शृणुतानन्तरं सर्वे क्रियतामाशु मा चिरम्॥ ५**
॥ ५॥

અરે ઓ દાનવો, હે દૈત્યો, હે દ્વિમૂર્ધા, હે ત્ર્યક્ષ, શંબર, શતબાહુ, હે હયગ્રીવ, નમુચિ, પાક, હે ઈલ્વલ, ઓ વિપ્રચિત્તિ, પુલોમા અને હે શકુન વગેરે (દૈત્યો), તમે મારું વચન સાંભળો અને પછી તમે બધા તે પ્રમાણે ઝડપથી કરો, વિલંબ ન કરો.॥ ૪॥ ૫॥ ૪॥ ૫॥

**सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत्।**
**पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः॥ ६**

સમાન (દૃષ્ટિવાળા) હોવા છતાં પણ તેમની (શ્રીહરિની) સેવા કરનારા હોવાને કારણે દેવોને (છૂપી રીતે) સહાયરૂપ થનારા શ્રીહરિ દ્વારા (પ્રેરિત) તુચ્છ શત્રુઓ (દેવો) વડે મારો પ્રિય સુહૃદ ભાઈ (હિરણ્યાક્ષ) હણવામાં આવ્યો છે.॥ ૬॥

समेनाप्युपधावनैर्भजनैर्निमित्तभूतैः पार्ष्णि-ग्राहेण सता॥ ६॥

સમાન (દૃષ્ટિવાળા) હોવા છતાં '**उपधावनैः**' તેમની સેવા કરનારા હોવાને કારણે સહાયરૂપ થનારા શ્રીહરિ દ્વારા॥ ૬॥

**तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः।**
**भजन्तं भजमानस्य बालस्येवास्थिरात्मनः॥ ७**

**मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै।**
**रुधिरप्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः॥ ८**

(સમત્વરૂપ) સ્વભાવનો ત્યાગ કરનાર, શુદ્ધ તેજોમય સ્વરૂપ હોવા છતાં માયાથી જંગલમાં વસતું ભૂંડ બનનાર, પોતાનું ભજન કરનારને સેવનાર અને બાળક જેવા અસ્થિર મનવાળા, મારા ત્રિશૂળથી કપાયેલા ગળાવાળા વિષ્ણુના પ્રચુર રુધિરથી, રુધિર જેને પ્રિય હતું તેવા મારા ભાઈનું તર્પણ કરીશ ત્યારે મારી વ્યથા દૂર થશે.॥ ૭॥ ૮॥

एवं त्यक्तः स्वभावः समत्वं येन तस्य। घृणेः शुद्धतेजोमयस्यापि मायया वनौकसो

આમ, સમત્વરૂપ સ્વભાવ જેણે ત્યાગ્યો છે તેના (વિષ્ણુના)– '**घृणेः**' શુદ્ધ તેજોમય સ્વરૂપવાળા હોવા છતાં માયાથી '**वनौकसः**' જંગલી ભૂંડ

